# कठकब्राह्मणम्

## अग्न्याधेयब्राह्मणम्

ब्रह्मवादिनो वदन्ति पुरा वा औद्दालकिरारुणिरुवाच ब्रह्मणे त्वा प्राणाय जुष्टं निर्वपामि ब्रह्मणे त्वापानाय जुष्टं निर्वपामि ब्रह्मणे त्वा व्यानाय जुष्टं निर्वपामि ब्रह्मणे त्वा समानाय जुष्टं निर्वपामि का एता देवता यासामेवैतज्जुष्टं निर्वपत्यृचो वे ब्रह्मणः प्राण ऋचामेवेतज्जुष्टं निर्वपति यजूंषि वे ब्रह्मणोऽपानो यजुषामेवेतज्जुष्टं निर्वपति सामानि वे ब्रह्मणो व्यानः साम्नामेवेतज्जुष्टं निर्वपत्यथर्वाणो वे ब्रह्मणः समानोऽथर्वणामेवेतज्जुष्टं निर्वपति । चतुःशरावो भवति चत्वारो हीमे वेदास्तानेव भागिनः करोति मूलं वे ब्रह्मणो वेदो वेदानामेवेतन्मूलं यदृत्विजः प्राश्नन्ति तद्ब्रह्मौदनस्य ब्रह्मौदनत्वम् १

निशि चर्मन्ब्रह्मा ब्रह्मौदनं निर्वपति रक्षांसि वे देवानां यज्ञमाजिघांसंस्तानि ब्रह्मणापाघ्नत ब्रह्म ब्रह्मा ब्रह्मणैव यज्ञाद्रक्षांस्यपहन्ति । चतुःशरावो भवति चतस्रो दिशो दिग्भिरेव यज्ञाद्रक्षांस्यपहन्ति । जीवतण्डुलो भवति संपद्ध्या । अपूतो वा एषोऽमेध्योऽयज्ञियोऽनृतमूचिवान्य ऋणान्यनवदायाग्निमाधत्ते तमन्वारम्भयित्वा यद्देवा देवहेडनं यददीव्यन्नृणमहमित्येता आहुतीराज्येन जुहोति पुनात्येवेनं पूतो मेध्यो यज्ञियोऽग्निमाधत्त एकविंशतिरेता आहुतीर्जुहोत्यसा आदित्य एकविंश एष सविता स ह देवस्य सवितुः पवित्रं तेनैवेनं सवितुः पवित्रेण पुनाति यदन्तरिक्षमित्यग्नय एवेनमेतदेनसः प्रमुञ्चन्ति संकसुको विकसुक इत्येतदेवास्मा अग्नयो यक्ष्मं चातयन्ति कृत्यां निर्ऋतिं सं वर्चसेत्याशिषमेवाशास्ते २

देवाश्च वा असुराश्चाग्न्याधेयायोपावसन्समावत्कुर्वाणा यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतमोदनमासाद्यैता आहुतीराज्येनाजुहवुस्तदसुरा नान्ववायंस् ततो देवा अभवन्परासुरा अभवन्य एवं विद्वानेतमोदनमासाद्यैता आहुतीराज्येन जुहोति भ्रातृव्यस्यानन्ववायाय भवत्यात्मना परास्य भ्रातृव्यो भवति प्रवेधसे कवय इत्युक्त्वोदनस्य जुहोति देवानामेव हेडान्यवयजते चातुर्मास्यान्यालप्स्यमानस्य दीक्षिष्यमाणस्यैता आहुतीराज्येन जुहोति पुना-

त्येवेनं पूतो मेध्यो यज्ञियो यजते पूतो मेध्यो यज्ञियो दीक्षते । श्व आधास्यमान रात्रीं जाग्रति तमो वा अन्धं स्वप्नस्तमस एवेनमन्धसो मुञ्चति शिल्पैर्गायन्ति शिल्पैर्हि सर्वं कुर्वन्ति ३

धारयत्येतमग्निं न मांसमश्नीयान्न स्त्रियमुपेयाद् अधः शयीत न विप्रवसेन्नास्य गृहादग्निँ हरेयुर्नाहरेयुरन्यत आत्मनो गोपीथायाग्निमेतमाधाय समिदाधानान्तं कुर्याद्वरं ददानीति वाचं विसृजते ऽशान्तो वा एष भूत्वा यजमानमभ्यैति वरेण चैवेनं सत्यया च वाचा शमयति ४

रथन्तरं गार्हपत्य आधीयमाने गायत्ययं वै लोको रथन्तरमयं गार्हपत्योऽस्मिंस्तेन लोके प्रतितिष्ठत्यग्निं ज्योतिरवरुन्द्धे वामदेव्यं दक्षिणाग्ना आधीयमाने गायत्यन्तरिक्षं वै वामदेव्यमन्तरिक्षं दक्षिणाग्निरन्तरिक्षे तेन प्रतितिष्ठति वायुं ज्योतिरवरुन्द्धे बृहदाहवनीय आधीयमाने गायत्यसौ वै लोको बृहदसा आहवनीयोऽमुष्मिंस्तेन लोके प्रतितिष्ठति सूर्यं ज्योतिरवरुन्द्धे । तदाहुरुपधीता वा एतस्याग्नयो यस्याधीयमाने सामानि गीयन्ते वत्सा हि सामान्यग्नीनां तेऽस्मै न सर्वा आशिषो दुह्रे तस्मात्सामानि न गेयान्यग्नीना-मविदोहाय सोमस्य वा एताः प्रियास्तन्वो यत्सामानि यदन्यत्र गीयेरन्सोमं प्रियाभिस्तनूभिर्व्यर्धयेरन्ननुपनामुक एनं सोमः स्यात्तस्मात्सामानि न गेयानि सोमस्योपनत्या । अग्निमादधानः सायमतिथिं ब्राह्मणं नापरुन्धीत सूर्येण सहेयिवांसं सूर्यो वै सायं ब्राह्मणं प्रविशति य आहिताग्नेरतिथिर्भवति स तृप्तोऽग्निं प्रविशति तस्मान्नापरोद्धव्यो नास्यानाश्वान्ब्राह्मणो गृहे वसेत्प्रजां चास्य पशूंश्च साधुकृत्याश्चाश्नीयाद्दानाय ह्येषोऽग्निमाधत्ते सायं प्रातरुदितेऽग्ना अहुते नाश्नीयादतिथिर्वा एष आहिताग्नेः पूर्वं ह्यतिथिमाशयन्ति । ऋबीसेन पक्वं नाश्नीयाच्छमलं वा एतदग्नेः स्वकृत इरिने नावस्येत्क्लिन्नं दारु नाभ्यादद्यादनाग्नेयं ह्येतन्नाव्युदकम्नाचामेद्यो वै नाव्यग्निः स आहिताग्निमा-रोहति तस्य शान्त्यै नानृतं वदेच्छमलं वा एतद्वाचो यदनृतं शमलगृहीतः स्याद्द्वादश रात्रीराज्येनाग्निहोत्रं जुहुयान्नवजाता वा एतस्याग्नयो यथा कुमारं नवजातं सर्पिराशयन्त्येवमेव तदजस्त्रोऽग्निर्भवति रक्षांषि वै भूतं संसज्यन्ते भूत एवेष देवानां योऽग्निमाधत्ते ऽग्निर्देवानां रक्षोहा रक्षसामपहत्या । अहतं वसीत मेध्यत्वायाथो सतेजस्त्वाया ऽध्वर्यवे वाससी परिहिते ददात्येष ह्येनं विराजि

प्रतिष्ठापयति तदेषाभ्यनूक्ता । उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुरित्यग्नीषोमीये पत्या वसने ददाति समेव जीर्यतो मिथुनौ गावौ देयौ मिथुनस्यावरुद्ध्या अथो ब्रह्मचारी भवत्यात्मनो गोपीथाय ५

गारो वा एषोऽग्नीनां यद्गार्हपत्यो ऽयं वावेक आसीन्नाहवनीयो न दक्षिणाग्निस्ते देवाः सह जायाभिर्गार्हपत्येऽन्नाद्यमपचंस्ते पक्त्वा समशनं प्राश्नन्या देवपत्नयस्ता हि यन्तीन्न प्राश्नन्तीति ते देवा अविदुर्यज्ञवेशसमिदं कुर्मेत्यग्निं विभजामेत्यग्निं व्यभजंस्तस्य योऽग्नेस्तृतीयो भागस्तं देवाः श्वो भूते प्राञ्चमनयन्स देवेभ्य आहवनीयोऽभवत्तदाहवनीयस्याहवनीयत्वं तस्माच्छ्वः श्वः प्राङ्प्रणीयते तस्य योऽग्नेस्तृतीयो भागस्तं देवपितरः पर्यगृह्णन्दक्षिणतोऽनयन्स दक्षिणाग्निरभवत्तद्दक्षिणाग्नेर्दक्षिणाग्नित्वं यथा वे वृषलयोनिजः पुत्रकः सर्वमत्ति मेध्यं चामेध्यं चैवं वे भ्राष्ट्राग्निः सर्वमत्ति मेध्यं चामेध्यं चाऽसुर्यो वा एष यद्भ्राष्ट्राग्निर्यत्तस्मिञ्जुहोत्यसुर्या अस्याहुतयो भवन्त्यसुरेभ्यो वा एष पुरा पक्वं पचति न पितृभ्योऽथ यः कामयेतामपक्वं मे पितृभ्यो भागधेयं भवत्विति गार्हपत्यादग्निं प्रणीयाहुतीर्जुहुयादामपक्वमेवास्य पितृभ्यो भागधेयं भवति तस्य यस्तृतीयो भागस्तं देवपत्नयः पर्यगृह्णन्स गार्हपत्योऽभवत्तद्गार्हपत्यस्य गार्हपत्यत्वं तस्मात्परिश्रिते गार्हपत्ये पत्नीः संयाजयन्त्याज्यहविषो भवन्ति रेतो वा आज्यं रेतसः प्रजाः प्रजायन्ते प्रजननाय । मण्डलं गार्हपत्यस्य लक्षणं कुर्यान्मण्डलो ह्ययं लोकोऽनेन लोकेन संमितं चन्द्रार्धं दक्षिणाग्नेश्चन्द्रार्धं ह्यन्तरिक्षमन्तरिक्षेण संमितं स्वर्गो लोकश्चतुरश्रस्तस्मादाहवनीयश्चतुरश्रः स्वर्गस्य लोकस्य समष्ट्यै ६

ब्रह्मवादिनो वदन्ति देवानां वा एतान्यायतनानि यद्गार्हपत्यश्च दक्षिणाग्निश्चाहवनीयश्च मण्डलं गार्हपत्यस्य लक्षणं कुर्यान्मण्डलो ह्ययं लोकोऽष्टाविंशत्यङ्गुलो भवति शक्वर्या संमितः सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्द्धे । चन्द्रार्धं दक्षिणाग्नेश्चन्द्रार्धं ह्यन्तरिक्षमन्तरिक्षेण संमितं देवतानां वा एतदन्नं यच्चन्द्रमा देवता एवास्यान्नमादयति द्वात्रिंशदङ्गुलो भवत्यनुष्टुभा संमितोऽनुष्टुभा वीर्यं करोत्यनुष्टुभेव वीर्येण यजमानं समर्धयति । चतुरश्रमाहवनीयस्य कुर्याच्चतुरश्रो ह्यसौ लोकोऽरत्निमात्रो भवत्येतावान्ह्यात्मा

प्रजापतिना संमितोऽन्नं वे प्रजापतिरन्नाद्येनैवेनं समर्धयति । हुत्वाग्नीनव-सृजेत्प्रजया च पशुभिश्च प्रजायते ऽथाहुरवसृष्टो ह्यृषभो वर्धत इति दिवो मात्रया वरिणा प्रथस्वेति प्रथयत्येव यथा दीप्यमानो भूयोऽभ्यादधात्येवमेवास्मिं-स्तदभिपूर्वं तेजो दधाति तदाहुः कः श्रेयांसं विषुप्तं बोधयितुमर्हतीति तस्मान्ना-वसृजेद् । य एवमेषामायतनं वेदायतनवान्भवति यस्यैवं विदुषो यस्यैवं विद्वानग्नीन्विहरति वसीयान्भवति ७

देवा वे सर्वे समेत्य प्रजापतिमपृच्छन्कुतस्त्रेताग्निर्भविष्यतीति स ऊर्ध्वपा-दोऽधस्ताद्भूम्यां शिरः कृत्वा दिव्यं वर्षसहस्त्रं तपोऽतप्यत तस्याश्रूणि परापतन्नश्रुष्वेवाश्वोऽजायत स व्यवर्तत स व्यधूनुत स शकृदकरोत्स परावृत्याजिघ्रत्ततः शकाछ्वस्यजायत तत्पार्श्वान्मध्याच्चाश्वसद्यत्पार्श्वान्मध्या-च्चाश्वसत्तदश्वत्थोऽजायत तस्य वेदो मूलं पर्णानि छन्दांसि शाखाः शाखा-न्तराण्येवमेष स शमीगर्भस्तच्छमीगर्भस्य शमीगर्भत्वम् ८

देवा वे सर्वे समेत्य प्रजापतिमपृच्छन्किं वायमग्निर्मिथुनात्संभवत्यथो अरण्या अथोत्तरादिति तान्प्रजापतिरब्रवीद्यथा वे पुरुषः स्त्रियमुपेत्य ततस्त्रिगुणा-न्मिथुनात्परिमथ्यमानात्पुरुषाद्रेतः संभवत्येतद्वै विष्णुरूपं यदुत्तरारणिस्त-द्गायत्र्या रूपं तस्मादेतस्मान्मिथुनादग्निर्मथ्यमानो जायते द्वादशाङ्गुल उत्तरो भवति द्वादश मासाः संवत्सरः संवत्सरस्याप्त्यै त्र्योदशाङ्गुलं छत्त्रं भवति त्रय इमे लोका दष मासाः संवत्सरः संवत्सरस्याप्त्यै त्रिषवर्णं नेत्रं भवति त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ९

अग्निर्वै देवेभ्योऽपाक्रामत्स प्रत्यङ्ङुदद्रवत्तस्मादध्वर्युः प्रत्यङ्मुखोऽग्निं मन्थति यत्प्रत्यङ्मुखोऽग्निं मन्थति तमेवाग्निमाह्वयते त्वेषस्ते धूम ऋण्वतीति यद्धूमे साम गायति देवेभ्य एवेनं निवेदयति गातुवित्तममिति यदग्नौ साम गायति देवेभ्य एवेनं निविदं करोति बालो वा एषोऽग्निस्तेजस्वीनि सामानि तस्मादग्न्याधेये सामानि न गीयन्ते तेजो ह्येषामेष न सहति रोदन्ति व आहिताग्नेरग्नयो यस्य प्राक्सोमे सामानि गीयन्ते तस्मात्सोमे गेयानि न प्राक्सोमे ऽग्नीनामग्नित्वायाथो सतेजस्त्वाय १०

चतुर्विंशत्यङ्गुलारणिर्भवति चतुर्विंशत्यक्षरा गायत्री गायत्र्या संमिता षडङ्गुलपृथ्वी षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठत्यरो वे विष्णुस्तस्य वा एषा पत्नी यदरणिस्तदरण्या अरणीत्वम् तस्या यान्यग्रे चत्वार्यङ्गुलानि तच्छिरो यदन्यानि चत्वार्यङ्गुलानि सा ग्रीवा यदन्यानि चत्वार्यङ्गुलानि तदुरः स्तनो बाहू पार्श्वे पृष्ठमुदरं च यदन्यानि चत्वार्यङ्गुलानि सा श्रोणी यदन्यानि चत्व-र्यङ्गुलानि तदूरू जानुनी यदन्यानि चत्वार्यङ्गुलानि तज्जङ्घे पादा इत्येता-वतैवारणिः सर्वैरङ्गैः संपूर्णा भवति यच्छीर्ष्णि मन्थति शिरोरोगेण यजमानः प्रमीयते यदास्ये वाग्विकलो भवति यद्ग्रीवायां तद्गद्गदो भवति यदंसयो-स्तत्पक्षहतो भवति यदुदरे क्षुधा यजमानः प्रमीयते यदूर्वोस्तद्यातुधा-नानांङ्घयोस्तत्पिशाचानां यत्पादयोस्तत्क्रव्यादानां यच्छ्रोण्यां मन्थति तत्स-र्वेषां देवानां तेन यजमानः स्वर्यो भवति य एवं वेद प्रथमे मन्थने स्थानकल्पा नानेतरेष्वनृतत्वं च गच्छति य एवं वेद ११

इत्यग्न्याधेयब्राह्मणम्

## अमाब्राह्मणम्

देवाश्च वा असुराश्चापां रसममन्थंस्तस्मान्मथ्यमानादमृतमुदतिष्ठत्ततो यः सर्वतो रसः समस्रवत्स सोमस्तत्सोमस्य सोमत्वं चन्द्रमा वे सोमस्तं देवाः कलशो भक्षयन्ति षोडशकलः पुरुषो लोमेति द्वे अक्षरे त्वगिति द्वे असृगिति द्वे मांसमिति द्वे स्नाय्विति द्वे अस्थीति द्वे मेद इति द्वे मज्जेति द्वे ताः षोडश संपद्यन्ते स एष षोडशकलः पुरुषः सोमस्य तस्य वसवः पञ्च कला अभक्षयन्त पृथिवीं पात्रं कृत्वा तेऽमृतत्वमकामयन्त तेऽमृतत्वमजयंस्ततो वे तेऽमृतास्तृप्ताः प्रीता अभवंस्तस्य रुद्राः पञ्च कला अभक्षयन्तान्तरिक्षं पात्रं कृत्वा तेऽमृतत्वम-कामयन्त तेऽमृतत्वमजयंस्ततो वे तेऽमृतास्तृप्ताः प्रीता अभवंस्तस्यादित्याः पञ्च कला अभक्षयन्त दिवं पात्रं कृत्वा तेऽमृतत्वमकामयन्त तेऽमृतत्वमजयंस्ततो वे तेऽमृतास्तृप्ताः प्रीता अभवन्नेका कलोदशिष्यत तां प्रजापतिः सिनीवाल्या अददात्तयेह पशुषु वनस्पतिष्वोषधीषु चामावसद्यदमावसत्तदमावस्याया अमावस्यात्वम् तया प्रातर्ददर्श यद्ददर्श तद्दर्शस्य दर्शत्वं तं देवा यागत आप्यायिताः पुनरप्याप्याययन्त स पूर्णः पौर्णमासीमुपावसत्तत्पौर्णमास्याः पौ-र्णमासीत्वं तस्मादाहुर्दर्शपूर्णमासयाजीँ ल्लोकानभिजयन्नेति सोमस्य सार्ष्टितां

सायुज्यं सलोकतामाप्नोति य एवं विद्वान्दर्षपूर्णमासाभ्यां यजते
इति अमाब्राह्मणम्

ब्राह्मणम्

चत्वारि शृङ्गा इति वेदा वा एतदुक्ताः
त्रयो अस्य पादा इति त्रीणि सवनानि
द्वे शीर्षे इति प्रायणीयोदयनीये
सप्त हस्तास इति सप्त छन्दांसि
तस्मात्सप्तार्चिषः सप्त समिधः सप्त इमे लोका
येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त

त्रिधा बद्ध इति त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः
ऋषभो रौरवीति रौरवणमस्य सवनक्रमेण

ऋग्भिर्यजुर्भिः सामभिरथर्वभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्त्यथर्वभिर्जपन्ति । महो देव इति महादेवो । मर्त्याँ आविवेश मनुष्याणां तस्योत्तरा भूयांसि निर्वचनाय । चत्वारि शृङ्गा चतुर्मुखाश्चतुर्वेदाश्चतुर्युगा अग्नयश्चत्वारोऽभवन्

स्वयं कैलासपर्वतो नाम एको भवति तदेकशृङ्गं द्विशृङ्गं दशशृङ्गं द्वादशशृङ्गं विंशशृङ्गं द्वाविंषशृङ्गं त्रिंशशृङ्गं द्वात्रिंशशृङ्गं शतशृङ्गं सहस्त्रशृङ्गं कोटिशृङ्गमनन्तशृङ्गं मेरुशृङ्गं स्फटिकशृङ्गं पितृशृङ्गं मनुष्यशृङ्गं द्वादशादित्यानां पूर्वापारं मुनयो वदन्ति सर्वमायुः सर्वमेत्यायुः सर्वमेति य एवं वेद

ग्रहेष्टिब्राह्मणम्

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतानि ग्रहहवींष्यपश्यँस्तैरिन्द्रमयाजयँस्त असुरा नान्ववायँस्ततो देवा अभवन्परासुरा अभवन्य एवं विद्वानेतानि ग्रहहवींषि यजते भ्रातृव्यस्यानन्ववायाय भवत्यात्मना परास्य भ्रातृव्यो भवत्यादित्याय घृते चरुं निर्वपेत्तेजस्तेन परिक्रीणाति शौक्रं चरुं ब्रह्मवर्चसं तेन परिक्रीणाति बृहस्पतये नैवारं पयसि

चरुं वाक्पत्यं तेन परिक्रीणाति बोधाय ववकपालं बुद्धिं तेन परिक्रीणाति भौमायेककपालं यशस्तेन परिक्रीणाति सौराय पललमिश्रं घृते चरुं सुरभिं तेन परिक्रीणाति चन्द्रमसे पञ्चदशकपालमायुस्तेन परिक्रीणाति राहवे चरुमभयं तेन परिक्रीणाति केतावे चरुमनपरोधं तेन परिक्रीणात्येतान्येव सर्वाणि भवति य एवं विद्वानेतया यजेत । आज्येनोपहोमाञ्जुहोत्याशिषामवरुद्ध्या एतया यजेत यः कामयेत तेजस्वी भ्राजस्वी वाक्पतिर्बुद्धिमान्यशस्वी सुरभिरायुषांनभ-य्यनपरुद्धी स्यामित्येकचक्रमुदयाद्भ्राजमानमित्यष्टादश याज्याणुवाक्या भव-न्ति सरूपत्वाया ऽग्निर्हिरण्यं सोमो हिरण्यमित्याज्यभागौ प्रेद्धो अग्न इमो अग्न इति संयाज्ये उच्चैर्यजत्येषा वे वाचामुत्तमा योच्चैरुत्तमः समानानां भवत्यादि-त्यस्तेजस्वीत्युपहोमाञ्जुहोति सर्वस्याप्त्यै सार्वस्यावरुद्ध्यै य एवं विद्वानेतया याजेत

## उपनयनब्राह्मणम्

ब्रह्मचर्यमागामित्याह ब्रह्म वे ब्रह्मा ब्रह्मणैवात्मानं परिदधाति तम्पृच्छति कोर्नामासीति प्रजापतिर्वै को नाम प्राजापत्यमेवेनं कृत्वा बन्धुमन्तमुपनयति भूर्भुवः स्वरित्याहेमानेवास्मै तत्रीं ल्लोकानन्नाद्याय प्रयच्छति भूरिति वा अयं लोको भुवरित्यन्तरिक्षं स्वरित्यसौ लोक इमानेवास्मै तत्रीन्वेदानन्नाद्याय प्रयच्छति भूरिति वा ऋचो भुवरिति यजूंषि स्वरिति सामान्यधीते हैतेषां वेदाणामेकं द्वौ त्रीन्त्सर्वान्वा यमेवं विद्वानुपनयते तमाह काय त्वा परिददामीति को वे प्रजापतिः प्रजापतय एवेनं तत्परिददाति न ब्रह्मचरी म्रियते नास्य ब्रह्मचरी संम्रियते यमेवं विद्वानुपनयते तमाह देवाय त्वा सवित्रे परिददामीति सविता ह वा इदं यद्यत्प्रजाभ्यः प्रसवति तत्तत्कुर्वन्ति स यदात्मना कुर्यान्न तन्मन्येताहमिदं करोमीति सविता मेऽसावीदित्येव तन्मन्येत यद्ध वे कल्याणं तदस्मै सविता प्रसवति नास्मै पापँ सविता प्रसुवते यमेवं विद्वानुपनयते तमाह बृहस्पतये त्वा परिददामीति ब्रह्म वे बृहस्पतिर्ब्रह्मण एवेनं तत्परिददाति न ब्रह्मचारी म्रियते नास्य ब्रह्मचारी संम्रियते यमेवं विद्वानुप-नयते तमाह ब्रह्मचार्यसीति ब्रह्म वा अन्नाद्यमन्नाद्यमेवास्मिंस्तद्दधात्यथो अन्नाद्यं वा अमृतममृतमेवास्मिंस्तद्दधाति तमाहापोऽशानेत्यापो वा इदं सर्वमा-प्नुवंस्तदेनमाह सर्वमाप्नुहीत्यापो वा अन्नाद्यमन्नाद्यमेवास्मिंस्तद्दधात्यथो अन्नाद्यं वा अमृतममृतमेवास्मिंस्तद्दधाति तमाह कर्म कुर्विति वीर्यं वे कर्म वीर्येण वा

अन्नमद्यते कर्म वा अन्नाद्यमन्नाद्यमेवास्मिंस्तद्दधात्यथो अन्नाद्यं वा अमृतममृतमेवास्मिंस्तद्दधाति तम् आह दिवा मा सुषुप्सीरिति मृत्युर्वै स्वप्नस्तस्मात्तमपबाधते मृत्युर्ह वे स्वप्नस्तस्माद्यो म्रियते तमाहुर्दीर्घं स्वप्नमस्वाप्सीदिति दिवा वा अन्नाद्यमन्नाद्यमेवास्मिंस्तद्दधात्यथो अन्नाद्यं वा अमृतम् अमृतमेवास्मिंस्तद्दधाति तमाह वाचं यच्छेति वाग्वा अन्नाद्यमन्नाद्यमेवास्मिंस्तद्दधात्यथो अन्नाद्यं वा अमृतममृतमेवास्मिं तद्दधात्येतानि वे पञ्चान्नाद्यानि पुरा सावित्र्यनुवचनादाचार्यो ब्रह्मचारिणि निदधाति । स वा एष ब्रह्मचारी सवित्र्या सह प्रजायते तदाहुः संवत्सरेऽनूच्या संवत्सरे वे रेतांसि सिक्तानि प्रजायन्त इत्यथो खल्वाहुर्द्वादशाहेऽनूच्या द्वादश मासाः संवत्सरः संवत्सरेणैवेनं प्रजनयति संवत्सरस्याप्त्यै तां तिसृणां रात्रीणां प्रातरनुब्रूयात्त्रीण्यहानि तिस्रो रात्रयस्त्रीणि सायानि तिस्र उषास्ता द्वादश संपद्यन्ते द्वादश मासः संवत्सरः संवत्सरेणैवेनं प्रजनयति संवत्सरस्याप्त्यै सा वा एषा सावित्र्येषां लोकानां प्रतिपदेषां च वेदानां तां न तिष्ठन्ननुब्रूयान्नोर्ध्वज्ञुरासीनो न व्रजन्महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः प्रत्यङ्ङासीनायान्वाह प्राङ्वे प्रजापतिस्तं प्रत्यञ्चो देवा अन्वायत्ता आचार्यो ब्रह्मचारिणः प्रजापतिरायतनादेवेनं तत्कल्पयत्यथैक आहुर्दक्षिणत आसीनायान्वाह स यदेवेनं तदनुव्याहरेत्तिर्यङ्तेन गर्भ आगच्छेद्धिंसिष्यतीति तस्मात्प्राङासीनः प्रतीचीनायेवासीनायान्वाह प्राङ्वे प्राणः प्राणमेवास्मिन्दधाति तां त्रिरेव कृत्वोऽनुब्रूयात्त्रयः प्राणाः प्राणो व्यानोऽपानस्तानेवास्मिन्दधाति तां द्विरेव कृत्वोऽनुब्रूयाद्द्वौ हि प्राणश्चापानश्च प्राणापाना एवास्मिन्दधाति तां सकृत्समस्योत्तमतोऽन्वाहैको हि प्राणः प्राणमेवास्मिन्दधाति

## श्राद्धब्राह्मणम्

असुराणां वा इमे लोका आसंस्ते देवा अब्रुवन् यो वे यं लोकं उज्नेष्यति स तस्मै भविष्यतीति ते वसव इमं लोकमजयन्नन्तरिक्षं रुद्रा दिवमादित्यास्ते वसव इमं लोकं जित्वान्तरिक्षं परापतंस्ते रुद्रानब्रुवन् यन्नो जयेम तन्नः सहासदिति ते वसवो रुद्राश्चान्तरिक्षं जित्वा दिवं परापतँस्त आदित्यानब्रुवन् यन्नो जयेम तन्नः सहासदिति ते वसवो रुद्राश्चादित्याश्चामुं लोकं जित्वेमानेव लोकानसुरानभ्यभवँस्ततो देवा अभवन्परासुरा अभवन्वसवः पितरो रुद्राः पितामहा आदित्याः प्रपितामहास्तस्मादाहुर्देवाः पितरः पितरो देवा इति यो

वे देवानां सोमपाः पितरस्तानुदपात्रैस्तर्पयन्ति तस्मात्त्रिरेकस्यापः प्रदीयन्ते द्विरेकस्य सकृदेकस्य तत्षट्संपद्यते यथाजितमेवोपलभन्ते यदन्नाणतमुदकं संपिबन्ति तत्सप्तमं यदुभयतोमूलैस्तिलमिश्रं तदष्टमं यत्पात्र्या पिण्डपरिषेकस्तन्नवमं यदुदकुम्भं दक्षिणां प्रोहन्ति तद्दशमं तेन दशोदकं श्राद्धमुच्यते तद्दश दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति १

पितरो वे पुत्रं जायमानमन्वायन्नस्माकं श्राद्धं कुर्यादिति सोऽब्रवीत्कदाहं श्राद्धं करवाणीति तेऽब्रुवन्हस्तिच्छायायां श्राद्धं दद्याद्यः कामयेत न पुनर्दद्यादिति हस्ती वे भूत्वा स्वर्भानुरमुमादित्यं छाययाभ्यभवत्तं देवपितर आप्याययन्नेतद्वै देवपितॄणामायतनं यद्धस्तिच्छाया तस्माद्धस्तिच्छायायां श्राद्धं दद्याद्यः कामयेताक्षय्यमपरिमितमनन्तं भूयः स्यादित्यक्षय्यमेवापरिमितमनन्तं भूयो भवति य एवं विद्वाङ्हस्तिच्छायायां श्राद्धं ददाति पितॄणामक्षय्यत्वाय २

द्वौ वे पन्थानौ देवयानश्च पितृयानश्चाग्निहोत्रेण वे देवाः स्वर्गं लोकमायन्पितृयज्ञेन पितृलोकं तस्मादुभौ यष्टव्यौ देवयानश्च पितृयानश्चोभाभ्यां वा एतत्स्वर्गं लोकमेत्याहुरन्यस्मिं ल्लोके समिधा प्रत्यतिष्ठन्नन्नाद्यं च ब्राह्मणेभ्योऽपासरँस्तेभ्योऽब्रुवन्नग्नौ कुर्माग्नौ करिष्याम्यग्नौ करवाणीति तेऽब्रुवन्कुरुत कुरुष्व क्रियतामिति यं कामयेत प्रजावान्स्यादिति तस्य यज्ञे कुरुतेति ब्रूयाद्यं कामयेत पशुमान्स्यादिति तस्य यज्ञे कुरुष्वेति ब्रूयाद्यं कामयेत वसीयान्स्यादिति तस्य यज्ञे क्रियतामिति ब्रूयादग्नीषोमीयं वा एतद्धविर्यदग्नौकरणमग्नीषोमीयेनैवेतद्धव्येनास्मिं ल्लोके यजमानो वसीयान्भवति ३

मनो वा एष युङ्क्ते यो यक्ष्यमाणो युङ्क्ते नहि मनसा यज्ञस्तायते स यज्ञो भवत्यथ श्रद्धत्ते श्रद्दधानं वे पितरोऽन्वायन्ति वृद्धिं श्रुत्वा यद्वृद्धिश्राद्धं कुर्वन्ति तेनास्य तेऽभीष्टाः प्रीता भवन्तीन्द्रो वे प्रजाकामः पितृयज्ञेनायजत्तस्यासुरा यज्ञमजिघांसँस्तान्विश्वे देवा उपाघ्नन्यद्वैश्वदेवं पुरस्तात्कुर्वन्त्यसुराणामपहत्यै प्राचीनप्रवणे देयं प्राचीनप्रवणो वे वज्रो वज्रेणैव यज्ञाद्रक्षांस्यपहन्ति दक्षिणाग्राश्चोदगग्राश्च दर्भा भवन्ति दक्षिणाग्रैभिर्वा अस्य पितरः समुपसरन्त्युदगग्रैभिर्देवास्तस्माद्ब्राह्मणेभ्य आवृत्ता दर्भाः प्रदीयन्ते पितॄणामुपसरत्वायेवमस्य पितरः समुपसरन्त्यन्तर्हिता ह्यमुष्मादादित्यत्पितरोऽथो अन्तर्हिता हि देवेभ्यश्च

मनुष्येभ्यश्च पितर उपमूलं बर्हिर्दाति तेन पितॄणां यदृतेमूलं तेन देवानामुभये हीज्यन्तेऽन्तर्हिता हि वीव्हया मनुष्यस्यैवमिव हि तेऽन्तर्हिता भवन्ति ४

इति श्राद्धब्राह्मणम्

मेखलाब्राह्मणम्

इयं दुरुक्तात्परिबाधमान इति दुरुक्ता वर्जयित्वा परिबाधन्ते वर्णं पवित्रं पुनती न आगादित्यपो वे वर्णमेव पवित्रमलं करोति प्राणापानाभ्यां बलमाहजन्तीति प्राणेवेपानाभ्यां बलं दधाति सुखा देवी सुभगा मेखलेयमित्याशिषमेवाशास्ते सौभाग्यं वे सुखा देवी दधाति सहस्त्रमावि प्रतिरन्त आयुः

इति मेखलाब्राह्मणम्

---

Typescript: Prepared by V. Jayaraman
Conversion to Devanagari using ITRANS Software by Ramnath K. Kadavasal

**Formatted for Veda Prasar Samiti Vedic Literature Series**